# अथ तुरीयसन्ध्याविधिः

- विधिवदाचम्य-मूलविद्यया शिखां बध्वा।
- मूलेन त्रिः प्राणानायम्य ।
- मम उपात्तदुरितक्ष द्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीमहात्रिपुरसुन्दरी परदेवतामुद्दिश्य श्रीमहात्रिपुरसुन्दरी परदेवताप्रीत्यर्थं तुरीयसन्ध्यामुवासिष्ये। इति देवी अष्टाङ्गमानेन सङ्कल्प्य
- गुरुपादुकां कृत्वा मूलविद्यया ऋष्यादि ध्यानान्तं विधाय
- स्वपुरतः धेनुमुद्रया जलममृतीकृत्य
- मूलविदययाष्टवारमभिमन्त्र्य ।
- तेन जलेन मार्जनं कुर्यात्।
- अं नमः आं नमः इं नमः ई नमः उं नमः ऊ नमः ऋ नमः ॠ नमः लुं नमः लूं नमः एं नमः ऐं नमः ओं नमः औं नमः अं नमः आः नमः कं नमः खं नमः गं नमः घं

आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661

नमः ङ नमः चं नमः छं नमः जं नमः झं नमः ञं नमः ट नमः ठं नमः डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः फं नमः बं नमः भं नमः मं नमः यं नमः रं नमः लं नमः वं नमः शं नमः षं नमः सं नमः हं नमः ळं नमः क्षं नमः

- प्रत्येकं शिरसि प्रोक्ष्य। क १५ मूलविद्यया त्रिः प्रोक्ष्य दक्षिणहस्तेन जलमादाय ।
- लं वं रं यं हं इति पाञ्चभौतिक मन्त्रैस्त्रिरभिमन्त्र्य
- क १५ मूलविद्यया त्रिरभिमन्त्र्य ।
- तज्जलबिन्दुभिः वामांगुष्ठानामिकाभ्यां मूलविद्यया स्वशिरसि त्रिः प्रोक्ष्य
- अवशिष्टजलं वामहस्ते निधाय
- तेजोरूपं तज्जलमिडयाऽऽकृष्य
- स्वदेहान्तस्थित सकल कलुषं प्रक्षाळ्य
- तज्जलं कृष्णवर्णं विभाव्य
- पिङ्गळ्या बहिनिर्गतं मत्वा

- तज्जलं पुन: दक्षिणहस्ते कृत्वा
- स्ववासभागे ज्वलद्वज्रशिलां ध्यात्वा
- ॐ क्लीं पशुहुम् फट् इति पाशुपतास्त्रमन्त्रेण तस्यां शिलया मास्फाल्य
- हस्तौ प्रक्षाळय
- क १५ मूलविद्यया जलमादाय ।
- प्रवहन्नाड्या सहस्रदळ कमलगते परमामृते नैकीभूतं भावयित्वा राजदन्तविवरान्नेत्रमार्गेण निर्गम्य
- तज्जलं वामकरे निधाय
- तेन जलेन अमृतमालिनी स्वाहेति मन्त्रेण करैः स्वशिरसि त्रिः प्रोक्ष्य ।
- ॐ ४ क ५ आत्मतत्वं शोधयामि स्वाहा।
- ॐ ४ ह ६ विद्यातत्वं शोधयामि स्वाहा।
- ॐ ४ स ४ शिवतत्वं शोधयामि स्वाहा।
- ॐ ४ स ४ शिवतत्वं शोधयामि स्वाहा।

- ॐ ४ ह ६ विदय तत्वं शोधयामि स्वाहा।
- ॐ ४ क ५ आत्मतत्वं शोधयामि स्वाहा।
- क १५ सर्वतत्वं शोधयामि स्वाहा
- इति त्रिधा एवं नवधा जलं पिबेत्।
- सहस्रारकमले मूलविद्यया तुरीयकूटं त्रयोदशाक्षररूपं पद्मरागसमप्रभम् ध्यात्वा
- वहन्नासापुटेन तारकमण्डलाद्बहिः परमाकाशे समाबाह्य तदुद्भूतां तेजोरूपां कूटमुच्चार्य
- 🔸 स 🔸 लह 🔸 क 🔸 लस 🔸 ल 🔸 ह्रींश्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः इति त्रिस्संपूज्य
- पुनस्तार्तीयीककूटगायत्रीमुच्चार्य
- क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्न शक्तिः प्रचोदयात्।
- श्रीमहात्रिपुरसुन्दरी श्रीपादुकायै अर्घ्यं कल्पयामि स्वाहा इति त्रिरर्घ्यं दत्वा

- पुनस्तुरीय कूटमुच्चार्य तद्यथा-
- 🔸 स 🔸 लह 🔸 क 🔸 लस 🔸 ल श्रीमहात्रिपुरसुन्दरी श्रीपादुकां तर्पयामीति त्रिस्सन्तर्प्य
- गुरुपादुकामुच्चार्य तुरीयगायत्री जप्त्वा तद्यथा-
- **क ५ वाग्भवेश्वरी विद्महे ह ६ कामेश्वरी च धीमहि स ४ तन्नश्शक्तिःप्रचोदयात्** इति यथाशक्ति जपः ।
- क १५ यथाशक्तिजपः 🔸 स 🔸 ल ह 🔸 क 🔸 ल स 🔸 ल 🔸 ह्रीं प्राणामामपूर्वकं जपं देव्यं निवेद्य स्तुत्वा

  उपस्थानम्
- त्रिपुरा सर्वरूपाणि चराणि स्थावराणि च।
- सायंप्रातस्तु मध्याह्न सर्वदा सा परा स्थिता ॥
- उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि।

  ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ॥
- आनन्द स्वच्छन्द चिद्रूपानन्दगोत्रः स्वनामशर्माहं भो

